# अनुक्रमणिका.



# प्रस्तावना

यच्चातुर्वैद्यगोभिस्त्रिभुवनविदितैरन्यशब्दज्ञवर्गः
खद्योतान्नामभावीदितरकविगणोऽशिश्रियत् तारकात्वम् ।
प्रापद् दोषाकरत्वं परसमयमतिस्तार्किकप्राज्ञसार्थः
स्तोतुं शक्यः स किं स्यादिव दिवसपतिर्हेमचन्द्रो मुनीन्द्रः ? ॥ १ ॥

केन खलु स्वधिषणाधरीकृतधिषणेन स्वल्पमतिना वा पुरुषमानिना, संप्रतिपन्नेन जिनपतिमतानुयायितां, भक्तिभरनिर्भरेण चेतसा न चिरपरिचित्यकारि; केन वान्यान्यमतलम्पटपाटवेनापि विदुषा, भेजुषा निर्भीकमभितोऽभियुक्तत्वाधिकारितां, नापश्चिमविपश्चित्त्वेन श्रवणमार्गमवातारि; केन वा तत्तद्ग्रन्थप्रणयनप्रकटितप्रज्ञाप्रकर्षेण प्राप्तरूपेण, प्राप्तवता प्रबुद्धपरिषत्सु प्रसिद्धिं, तत्र तत्र स्वाभिप्रायसंवादकतया न समस्मारि भगवतो हेमचन्द्रस्य शरदिन्दुसुन्दरयशसः सुविहितसुगृहीतं नामधेयम् ?। उपनिबद्धमप्येतस्य भगवतः सोमप्रभ–प्रभाचन्द्रप्रभृतिभिर्भूरिभिः सूरिभिः, उत्तरोत्तरं प्रतिपच्चन्द्रमसः कलेवाधिकाधिकमुन्नतीभूयमाभेजानम्, असदृशतादृशगुणगणस्य रोहण इव रत्ननिकरस्य निधानं, राजसभावाप्तमहोदयमपि सात्त्विकधुराधुरीणतामादधानम्, अनुविदधानं च सर्वथा तत्तच्चिरंतनयति-

पतिचरितं, चेतस्विचेतश्चमत्कारैककारणं चरित्रम् । तस्य चातिगरीयस्तया, अवरीयस्तया पुनरत्र स्थलस्य, न प्रथीयस्तया शक्यते विधातुमुल्लेखम् । परिपूर्यते तु प्रभावकचरित्रप्रतिपादितेन पद्यद्वयेनैव भगवतः सत्तासमयादि विविदिषोर्विदुषो विविदिषा; तच्चेदम्—

"शर[1]-वेदे-श्वरे वर्षे कार्तिके पूर्णिमानिशि ।
जन्माभवत् प्रभोर्व्योम[2]-बाण-शम्भौ व्रतं तथा ॥ १ ॥
रस[3]-षट्के-श्वरे सूरिप्रतिष्ठा समजायत । नन्द[4]-द्वय-रवौ वर्षेऽवसानमभवत् प्रभोः ॥ २ "

आचार्यवृन्दवन्दितचरणारविन्दश्चायं भगवान्, अन्तरेणैवान्यसाहाय्यं, विनिरमास्त निःशेषैरपि विशेषैर्विभूषितं, सूक्ष्मेक्षिकया वीक्ष्यमाणमपि दोषलेशस्यापि प्रवेशेनादूषितं, सकलैरप्यङ्गोपाङ्गैः परिपूरितं, सुबहुविस्तीर्णमपि न कृच्छ्रगम्यं, सुगममपि नैकेनापि नियमेन विनिर्मुक्तम्, अन्यूनमपि च झटिति व्युत्पत्त्याधायकं; किं बहुना ? अविहितं प्राचीनैः, दुःशकं सध्रीचीनैः, सर्वथाऽशक्यं चार्वाचीनैर्लक्षणदक्षैः, सपादश्लोकलक्षलक्षितं सिद्धहेमचन्द्राभिधानं शब्दानुशासनम्; उपन्यभान्त्सीत् सुसंबद्धबन्धुरपद्धतिमलङ्कुर्वन्तं, सुबहूनपि शब्दानेकार्थवाचकान् प्रतिपादयन्तं, संकलयन्तं च नानार्थाभिधायकानेकैकशब्दान्, परितः प्राप्तप्राज्ञपञ्चजनप्रशंसमभिधानचिन्तामण्य-ऽनेकार्थसंग्रहादिकोशशास्त्रसमूहम्; आविरबीभवत् समस्तमपि साहित्यशास्त्ररहस्यं प्रादुर्भावयन्तं, निखिलान्यपि तत्र तत्र विसंवद-

१, वैक्रमे ११४५ । २. ११५० । ३. ११६६ । ४. १२२९ ।

मानान्यप्यालङ्कारिकाभिमतानि मतानि नीतितो निरस्यन्तम्, अवधीरयन्तं च सर्वातिशायिना विषयविन्यासक्रमेणान्यान्यलङ्कारशास्त्राणि, गाम्भीर्यपरिपूर्णं टीका-विवेकविभूषितं काव्यानुशासनं नामालङ्कारग्रन्थम्; अग्रन्थीच्च दुस्तर्कतर्कसंपर्कातिकर्कशतामावहत्, युक्तियुक्तं स्याद्वादवादैकनिरवद्यहृद्यतां प्रसाधयत्, कणभक्षा-ऽक्षपादादिप्रतिपक्षपक्षमाक्षिप्तपक्षपाततया प्रतिक्षिपत्, अक्षुण्णं च कक्षीकृतमक्षतदक्षैर्विचक्षणैः श्रीवादानुशासन-प्रमाणमीमांसादि तर्कशास्त्रम्; प्राणैषीच्च शेषेष्वशेषेषु विषयेषु संपूर्णतया तं तं विषयं विवेचयन्ति, दोषपङ्ककलङ्कशङ्कामप्यनङ्कयन्ति, आसादयन्ति च सहृदयहृदयानां हृदयङ्गमभावम्, अर्हन्नीति-स्तुति-योगशास्त्र-द्व्याश्रयप्रभृतीनि गीर्वाणवाणीमलङ्कुर्वन्ति, प्राकृतद्व्याश्रय-देशीनाममालादीनि भिन्नभिन्नभाषामयानि चानल्पानि ग्रन्थरत्नानि।

एवं च किरीट इवालङ्कारसमुदये मूर्धन्यतामाभजमानो वैयाकरणनिवहेषु, चक्रवर्तीव धराशक्रचक्रेषु नायकत्वमावहमानः कविवरनिकरेषु, तिग्मज्योतिरिव ज्योतिर्धोरणीष्वसाधारणतामादधानः सिद्धान्तविद्विबुधविसरेषु, कण्ठीरव इव च वारणवारनिवारणे प्रतिवादिपक्षप्रतिक्षेपे निष्प्रतीकाशप्रागल्भ्यमाबिभ्राणो लोकोत्तरसामर्थ्यसंपाद्यकार्यव्यूहकर्तृत्वेन दिगन्तव्यापावदातयशा भगवान् हेमचन्द्रः, कस्कं वसुधाविहारिणं धरणीस्पृशं नापिपद् निःसीमोपकारभारावनम्रतां, कांस्कान् वा गर्वान्नमितकन्धरानपि धीधनधीरधुरन्धरान् नापीपदत् परमाश्चर्यैकनिमग्नतां, कांस्कान् वा तदानीन्तनान् परमतानुयायिनोऽपि विचक्षणान् स्वप्रौढपाण्डित्यप्रभावेण नाजिजल्पत् "वैदुष्यं विगताश्रयं श्रितवति श्रीहेमचन्द्रे

दिनम्” इत्यादीननेकश्चित्ताकर्षकशब्दमयान् हृदयोद्गारान्, कां कां श्रीमदार्हतशासनप्रभावनां नाचीकरच्चतुरम्बुराशिकलापां काश्यपीमनुशासतं परमार्हतं कुमारपालधरापालम् ? ।

अयमपि स्थविरावलिचरित्राख्यो यथार्थमभिधानमादधानो ग्रन्थस्तेनैव जगद्विश्रुताभिधेन भगवता, जलनिधिमिव जलानामाश्रयं शब्दार्थवैचित्र्यस्य, आकरभूमिमिव धातूनामास्पदं प्रसादादिगुणानां, निधानस्थानमिव सदर्थानां पात्रमलङ्काराणां, गगनमिव परिमाणस्यावधिं रसानां, भाण्डागारमिव सारवस्तुनो निलयमार्हतस्येतिवृत्तस्य, दशपर्व्यात्मकं त्रिषष्टिशलाकापुरुषचरित्राह्वयं महाग्रन्थं विरचय्य, शिखरारोप इव महीयसि प्रासादे तस्मिन् परिशिष्टपर्वरूपो विनिरमायि ।

अधिकृतं चात्र, प्रत्यक्षमुपलक्ष्य क्षणिकामिव क्षणिकतामाश्रयन्तीं प्रभूतविभूतिं, निपुणं विभाव्य ध्वजाञ्चलमिव चञ्चलतामाकलयन्तीं युवत्वसंपत्तिं, सम्यगवधार्य प्रेक्षणक्षणमिव क्षणभङ्गुरतामास्वजन्तं स्वजनजनसंसर्गम्, अवितथं विचारगोचरतामानीय च बुद्बुदपटलमिव झटिति पतयालुतामश्नुवानं जीवितव्यं,सर्वथाऽपारसंसारावारपारनिःसारतामधिजग्मुषां;तिरस्कृतवैश्रमणवैभवं निजं महाविभवप्राभवमपि तृणखण्डमिव परित्यज्य, परमार्थप्रतिबन्धैकबद्धकक्षं च विषयलाम्पट्यं सुदूरमुत्सार्य शाश्वतिकामन्दानन्दसंदोहैकनिदानं चारित्रश्रियमधितस्थुषां; निरुपमशमशस्त्रेण पावकपटेकमिव धाराधरधारया क्रोधयोधं विध्वस्य, महामार्दवमन्त्रेण कालकूटकष्टमिव पीयूषयूपेण मानव्यालं वशीकृत्य, अस्खलिताजवबलमदोन्मत्तकुम्भिनमिव केसरिकिशोरकेण दम्भारम्भं संहृत्य, संतोषपोषमहिम्ना वारांनिधिमिव वरुवानलेन लोभप्रसरं संशोष्य, सम्यग्ज्ञानोद्द्योतेन तिमिरनिकरमिव सहस्रकिरणेन मोहावेशं प्रतिबद्ध्य, विर-

कभावप्रभावेण क्षितिरुहव्यूहमिव हव्यहविषा कन्दर्पदर्पमुत्क्षिप्य च साम्यसाम्राज्यमाजेजुषां श्रीमन्महावीरप्रभुपट्टपद्मामलंचक्रुषां श्रीजम्बूस्वामिनः प्रारभ्य श्रीवज्रस्वामिपर्यन्तानां महामुनीनां यथाजातमितिवृत्तम् ।

कविकुलतिलकायमानेन चानेन भगवता परिपुष्य सुश्लिष्टमुखादिसन्धिमाधुर्यम्, परिपूर्य मनोमुदाधाननिबन्धनमविषमबन्धबान्धुर्यम्, निरस्य रसभावनैरन्तर्येण प्रबन्धवैरस्यम्, निर्वर्ण्य च नगनगराऽर्णवादिवर्णनीयनिकुरम्बम्, सुसूत्रसंविधानकत्वेन सदलङ्कारवाक्यविन्यासेन, सर्वथा रसस्वरूपानुरूपसंदर्भेण चाङ्कितोऽयं ग्रन्थः कृत्स्नैरपि महाकाव्यलक्षणैर्विभूषित इत्यत्र कथंकथिकता कथमपि न शक्नोति प्रवेशलेशावकाशमासादयितुम् ।

यत्तु 'स्वयं निरवद्यचातुर्वैद्यप्रणेतुरस्य ग्रन्थकर्तुर्वचनरचनायां साधारणजनेनापि कर्तुमनर्हाणि स्खलनानि कथमवकाशमासादयेरन् ?' 'स्वतन्त्रव्याकरणादिकर्तृत्वस्योभयत्र समानत्वेन हेमचन्द्रस्याप्यन्यवैयाकरणादेरिव वा मतभिन्नत्वं कथं न भवेत् ?' 'कथं वा मतभेदेऽपि च तस्य प्रमाणतयाऽवश्योपादेयत्वेन सदूषणत्वमुच्यमानं शोभामाबिभ्रीत ?' इत्यादीननेकशः सूक्ष्ममनीषागम्यान् बलीयसोऽपि बाधकतर्काननपर्यालोच्य पण्डितयाकोविना ( H Jacobi) स्वसंशोधितस्य कलिकातीया एसियाटिक्समित्या च प्रसेधितस्यैतस्यैव परिशिष्टपर्वणः प्रस्तावनायां ग्रन्थकर्तुर्दूषणजालमुपन्यस्तम्, तस्य सर्वस्याप्येकैकशः प्रतिविधानं यद्यप्यन्यत्र पूर्वमेव व्यदधाम्, तथापि तस्यैतद्ग्रन्थविषयकत्वेन 'एतत्साहाय्यापेक्षा वीक्षन्तां विचक्षणाः सुखं तानि विवादमार्गमध्यासीनानि स्थलानि, अक्षुण्णं परीक्षन्तां च प्रेक्षावन्तस्तत्सत्यासत्य-

स्वरूपम्' इति हेतुना महोपयोगितामवधार्य दूषणोल्लेखसहितं तमेव संपूर्णमपि निबन्धमत्रोल्लेखितुमुचितमुत्पश्यामि ।

तत्र चायमाक्षेपविभागः—

"To the fact that Hemachandra has used Prakrit originals, must be ascribed his occasional use of Prakriticisms e g, अंतर् XII, 320 used in the sense of उंतर्, and I, 67, 136, XIII, 104 उत्तर्, for अवत्, just as in Prâkrit ओयरइ and उत्तरइ are interchangeable The word पदानुसारिन् in XII, 137 is probably a wrong translation of Prâkrit पयाणुसारी which means पदानुसारिन्, compare जाईसर= जातिस्मर The name वीरमती in II, 82 is a Prākriticism for वीरवती Unusual, if not against grammar, are the forms मातरपितराभ्या in III, 130, the adjectives चिकीर्षु in VII, 9 and प्रतिचिकीर्षु in VIII 453 instead of चिकीर्षु and प्रतिचिकीर्षु the use of the simplex व्यतिइ instead of the causative Another *proof of Hemachandra's careless and hasty composition* is his rather too frequent use of meaningless words to fill up an otherwise too short verse His verses frequently bear the marks of rapid versification like those of the Latin poet who

**In Hora Saepe Ducentos,**

**Ut Magnum, versus Dictabat Stans Pede In Uno.**

Some verses contain metrical faults in श्रेष्ठिऋषभदत्तस्य, I, 264, किं बहुनार्थपरासुं II, 329, तौ मरता प्रीणयितु VI, 49, सम्यगुपलक्षयेहं, XI, 38, कान्दविकानथादिशत्, XI, 110, मालवकैशिकीमुख्य०, XIII, 59 the

१ अनुष्टुप् । २ मिथ्या ।

second and third syllables of the *pāda* are short, though this is expressly forbidden by writers on metrics. In I, 288, II, 251, 484, III, 9, VIII, 370, XIII, 73 an enclitical monosyllabic word stands after the caesura against the rule. The third *pāda* in III, 214 ललिताङ्गपथापास्ति consists of nine syllables; such *pādas* of nine syllables are not unfrequent in epical poetry, but classical poets avoid them. There are some nicer rules on the Vipulâ form of the sloka which though not laid down in native works on metrics are always observed by Mahâkavis. Hemachadnra's verses set these rules aside nearly as often as they conform to them, e. g., in III, 145 the first *pāda* is correct, but the third is bad."

इदं चात्र प्रतिविधानम्—

"यद्यप्ययं लेखः सर्वथा प्रमाणाऽस्पर्शित्वेन विद्वत्सदस्सु कथञ्चिदप्यादरं नैवावहति इत्युपेक्षाक्षेत्रमेव प्रेक्षाणाम्, तथाऽप्यभ्युपगमवादेनापि तस्याऽसत्यता सप्रमाणं प्रदर्श्यमाना संदिग्धानां विदग्धानां संशयापोहकत्वेनाऽवश्यमुपकर्त्री, इति प्रतिपाद्यते—

पूर्वं तावदत्र ग्रन्थे प्रयुक्तानां केषाञ्चिच्छब्दानां प्राकृतप्रयोगसादृश्यदर्शनेन प्राकृतमूलत्वसंस्थापनमेव विचारासहम्, अतिप्रसङ्गात्। अतिप्रसङ्गश्च संस्कृतप्राकृतभाषयोः कार्यकारणभावेन बहुषु स्थलेष्वेकतया तत्सादृश्यवतां शब्दानां कुत्रापि संस्कृतग्रन्थेऽनिवार्यत्वेन सर्वेष्वपि संस्कृतपुस्तकेषु प्राकृतमूलत्वापत्तेः। कः खलु संख्यावान् प्राकृतेऽपि देवादिशब्दानां समानत्वेन संस्कृते तत्प्रयोगं निषेधति ?, तत्प्रयोक्तारं च प्राकृतशब्दव्यवहारित्वेन दूषयति ?, दूषयन् वा कथमपहास्यतां न याति ?।

प्रकृतौ भवं, प्रकृतेरागतं वा प्राकृतम्, प्रकृतिश्चैतस्य संस्कृतमिति सर्वानुमतसिद्धान्तेन प्राकृतस्याऽपि मूलं संस्कृतमेवेति न्याय्यम्, तथा चाऽसति प्रतिबन्धके ( विशेषनियमे ) संस्कृतानुसारिण्येव प्राकृतेऽपि शब्दार्थव्यवस्था; इत्युत्पूर्वकस्यावपूर्वकस्य च तृधातोर्विशेषनियमं विनापि प्राकृते एकार्थतामङ्गीकुर्वन्, तदन्यथानुपपद्यमानत्वेन संस्कृतेऽपि तत्तत्पूर्वकस्य तृधातोर्द्वयोर्यप्राप्तायां समानार्थतायां प्रयोगं कुर्वन्तं कर्तारं च दूषयन् प्रस्तावकः किञ्चित् पौर्वापर्यमपि न पर्यालोचयतीति चित्रम्। किञ्च, हेमचन्द्राचार्यस्यैव स्वतन्त्रमहाव्याकरणप्रणेतृत्वेन, अनेकाप्रतिमकोशकर्तृत्वेन च सर्वैरप्यङ्गीकृतप्रामाण्यतया तत्प्रयुक्तप्रयोगाणां स्वतःसिद्धैव प्रमाणता, इति नात्राऽन्यानि प्रमाणान्यपेक्ष्यन्ते; तथापि 'तुष्यतु दुर्जनः' इति न्यायेनाऽनेकैः सुविश्रुतकविवरैर्हेमचन्द्राचार्येणेव बहुशः प्रयुक्तयोरेतयोर्विवादास्पदीभूतयोः प्रयोगयोः कानिचिदुदाहरणानि प्रदर्श्यन्ते—

"वनान्तपर्यन्तमुपेत्य सस्पृहं क्रमेण तस्मिन्नवतीर्णदृक्पथे" नैष—१—७५.
"स्वर्गिवर्ग इव नाकिविमाना—दुत्ततार भुवि हीरकुमारः" हीरसौ—५—९.
"विमानैर्व्योमतस्तूर्णमुत्तीर्णा वर्णिनीवृताः" वासु—१—६५३.
"खिन्ना इवोत्तेरुरमी भ्रमिश्रमाच्चन्द्रार्यमस्यन्दनगा नभस्तलात्" विजय—१०—२०.

यदपि 'प्राकृतस्य पयाणुसारीति शब्दस्य पदानुसारीति यत् कर्त्राऽनूदितम्, तदसत्यमेव, किन्तु पदानुसारी इत्येव स्यात्, यथा जाईसर जातिस्मर' इति प्रोक्तम्; तदपि एतस्य प्राकृतानुवादरूपत्वेनाऽस्वीकारादेव निरस्तम्। तदङ्गीकारेऽपि वा नैतत् कथमपि कर्तुर्दूषणमाधातुमलम्, संस्कृतस्य पदानुसारिश-

ब्दस्याऽपि प्राकृते पयाणुसारीतिरूपनिष्पादनात्; अर्थतोऽपि पादानुसारीति कर्त्रा प्रयुक्तस्यैवाऽत्र संगतत्वात्; अन्यत्राऽपि—

"सीसेइव जस्स ताराणुसारिणिग्गयकलङ्कवलएण।"

"गूढोयरतामरसाणुसारिणी भमरमालव।"

इत्यादिषु बहुशः कविवरैः प्रयुक्तेषूपलभ्यमानस्य अणुसारिशब्दस्य संस्कृते प्रस्तुतानुसारमनुसारिरूपेणैवाऽनुवादस्य दर्शनाच्च। यथा 'अणुसरेइ अनुसरति, अहिसारण अभिसारण' इत्यादीनि। न हि संस्कृतस्याऽनुसरतिरूपस्यैव, अभिसारणशब्दस्यैव च प्राकृते 'अणुसरेइ, अहिसारणेति भवितुमर्हति, किन्तु प्रस्तावकानभिमतं अनुसरति, अभिसारणेत्याद्यपि। तथा च प्राकृतद्व्याश्रयमहाकाव्ये—

"किंसा तिस्सा जिस्सा सो जुवईए अणुसरेइ।" ४—७४.

गौडवधेऽपि—

"अहिसारणम्मि तं रिउसिरीए णिसियासिघडियपडिबिम्बो।" ७१२.

---

१ "नो णः" (हेम-प्रा-१।२२८) इति नस्य णत्वे "कगचज-" (१।१७७) इति दस्य लुकि "अवर्ण-" (१।१८०) इत्यनेनाकारस्य यत्वे वररुचेः प्राकृतप्रकाशस्य वा "नो णः सर्वत्र" (२।४२) "कगचजतदपयवां०" इत्यादिना कार्यजाते सति। २ गौडवधे १०६४, "शिष्यत इव कथ्यत इव यस्य तारानुसारिनिर्गतलक्ष्यवलयेन" इति तट्टीका। ३ गौडवधे १८, "गूढोदरतामरसाणुसारिणी भ्रमरमालेव" इति टीकायाम्। ४ "स कां यां तां युवतिमनुसरति.... पृष्ठानुयायी भवतीति भावः" इति टीका। ५ "अभिसारणेऽभिसरणकाले त्वं रिपुश्रियाः निशितासिघटितप्रतिबिम्बः" इति तट्टीकायाम्।

न चात्र कथमपि अनुसरति अन्निस्मारणं चेति प्रस्तावकानुमतं घटामाटीकते, प्रस्तुतासङ्गतत्वात्, तट्टीकाकाराभ्यामपि अनादृतत्वेन तिरस्कृतत्वाच्च । एतेनात्र प्रस्तावकप्रयुक्तं जाईसरेत्येकदेशीयमुदाहरणमप्यकिञ्चित्करत्वेन सुतरां प्रत्युक्तम् । इत्यमुमतीव सुज्ञानं विषयमजानन्, निर्दोषेऽपि दूषणं प्रदर्शयन् प्रस्तावकः कियत् साहसं प्रकटयतीति विदुषामेव विचारगोचरः ।

यदपि 'वीरवतीति प्रयोज्ये प्राकृतानुसारेण वीरमतीत्यशुद्धरूपं कर्त्रा प्रयुक्तम्' इत्युक्तम्, तदपि भ्रान्तिमूलमेव, ऊर्म्यादिपाठेन वीरशब्दस्य मतोर्मकारस्य वत्वनिषेधेन तस्य ( वीरमतीत्यस्य ) सूपपद्यमानत्वात्, "तत्राभूद् मम्मणो राजा तस्य वीरमती प्रिया" ( हे० त्रि० प०७, स० ३, श्लो० ११९ ) "त्वं तु वीरमती नाम तस्याभूर्दयिता किल" ( देव० पा० स० ६, श्लो० ६२३ ) इत्यादौ तस्यैवमेव स्पष्टमुपलम्भात्, गणपाठस्य चेष्टविषयत्वेन संज्ञायामेव तेन वत्वनिषेधात् "ह्रिणीयते वीरवती न भूमिः" इत्यादौ वत्वस्याऽपि निष्पत्त्या बाधाभावाच्च ।

यदर्थं भिन्नमेव व्याकरणसूत्रम्, न ते महाकविभिरप्रयोज्यतां कदाप्यर्हन्ति, यथाऽमावास्यादि, भिन्नमेव चैतत्सिद्ध्यर्थं "मातरपितरं वा" ( ३।२।४७ ) इति सिद्धहेमव्याकरणस्य "मातरपितरमुदीचाम्" ( ६।३।३२ ) इति पाणिनीयस्य च सूत्रम्; इति मातरपितरस्य काव्यप्रयोगयोग्यत्वे निर्दोषं निष्पन्नेऽपि,

"पितरौ मातापितरौ मातरपितरौ पिता च माता च"

१ भट्टिकाव्ये द्वितीये सर्गे–३८ । २ अभिधानचिन्तामणौ मर्त्यकाण्डे २२४ ।

"[1]मातापितरौ पितरौ मातरपितराविति प्रसूतातौ"

"[2]मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ"

इत्यादिषु च बहुषु कोशेष्वपि तत्प्रामाण्यं संवदत्सु मातरपितरशब्दस्य कर्त्रा प्रयुक्तस्य प्रयोगानर्हतां प्रजल्पन् प्रस्तावकः कथमिव प्रमाणतामङ्गीकुर्यात् ?, कथं च तस्याऽप्यभिमतानां बहुशो दृश्यमानानां धवलार्जुनादिशब्दानामपि प्रयोगानर्हतां वदतो वदावदस्य वक्त्रं वक्रीकुर्यात् ?। एतेन चिकीर्षति प्रतिचिकीर्षतीति कर्त्रर्थे क्विपि सुष्ठु निष्पद्यमानयोः, "[3]हास्यास्पदं काव्यचिकीः कवीनाम्" इत्यादिषु चोपलभ्यमानयोश्चिकीर्-प्रतिचिकीर्शब्दयोरप्यप्रयोज्यतादूषणं नितरां निराकारि।

'व्यतिपूर्वकस्य इधातोः प्रयोक्तृरूपे व्यवहर्तव्ये णिवर्जितमेव तत् कर्त्रा व्यापारि, लघ्व्यामेव च वचनरचनायां कर्तव्यायां गुर्वी साऽकारि' इति निर्णयमुल्लिखंस्तत्स्थलमपि चाऽनिवेदयन् प्रस्तावकः साहसिक इव विरूपमेवाऽऽचरन् कथं प्रतिवचनीयः ?। न हि तत्स्थलमात्रस्याऽप्यनिर्णीतौ निर्मूलमेव साधनवचनं वा दूषणाभिधानं वा भूषणाय भवति। यदि चेदानीमपि प्रस्तावकस्तत्स्थाननिर्देशपूर्वकं स्वमतमाग्रहीष्यते, बद्धस्पृहेयमस्मल्लेखिनी सयुक्तिकोक्तिक्रमेण सुखमेव योग्योत्तराय प्रयतिष्यते, इत्यास्तां तावत्।

छन्दःशास्त्रसंबन्धे वदता प्रस्तावकेन कर्त्रा प्रयुक्तानि यानि छन्दांसि दुष्टत्वेनाऽभिहितानि, तानि निःशेषाण्यप्यत्र श्रीमतो हेमचन्द्राचार्यस्याऽपि स्वयं छन्दोऽनुशासनविनिर्मातुरन्यस्येव स्वतन्त्रप्रमाणत्वेनाऽवश्यादरणीयतया दूषणान्येव न भवन्ति, किमङ्ग ! तद्विवेकप्रयत्नेन ?। तथापि "येन केन प्रकारेण

१ वैजयन्त्यां पृ १७६ पं ९४। २ अमरकोशे मनुष्यवर्गे–३७। ३ सम्यक्त्वसंभवमहाकाव्ये १–१४।

संतोषं जनयेत् सुधीः" इत्युक्तिं समाश्रित्य प्रस्तावकतोषपोषायाऽन्यैरपि छन्दःशास्त्रैस्तत्सत्यता प्रकटीक्रियते–पूर्वं तावद् "श्रेष्ठिरूपचन्ददत्तस्य" इत्यादिपद्के द्वितीयतृतीयाक्षरलघुत्वेन "न प्रथमात् स्नौ" ( पि० सू० ५।१० ) इति नियममालम्ब्य यद् दूषणमुपन्यस्तम्, तच्छन्दःशास्त्रानवगाहफलमेव, यतोऽयं नियमोऽनुष्टुब्भेदविशेषे वक्त्रनामन्येव समस्ति, न त्वन्यत्र, "पादस्यानुष्टुब् वक्त्रम्" ( पि० सू० ५।९ ) इत्येतदुत्तरमस्य नियमस्य प्रतिपादनेन तस्यैव तत्रानुवृत्तेः । तथा च वृत्तिकारः "न प्रथमात् स्नौ" ( पि० सू० ५।१० ) इत्यस्यैव वृत्तौ–"अत्र वक्त्रजातौ पादस्य प्रथमाद् वर्णादूर्ध्वं सगणनगणौ न कर्तव्यौ" इति । न च कर्त्रा सर्वत्र वक्त्रछन्दांस्येव व्यवहृतानि, किन्तु तन्नियमरहितान्यन्यान्यपि, महाकाव्यत्वेनाऽपरापरछन्दसामुपनिबन्धस्य समुचितत्वात्; इति क्व नाम दूषणदुःस्थता ? । न चानुष्टुबिति पदस्येव वक्त्रमिति पदस्यापि "ज्रौ न्तौ च" ( पि० सू० ५।१९ ) इति सूत्रं यावदनुवृत्तेः, तदनन्तरं चाष्टाक्षरजातेरभावेन वक्त्र एवाष्टाक्षरजातेः पर्यवसिततया श्रीहेमचन्द्रव्यवहृतानामप्यष्टाक्षरवृत्तानां नितरां वक्त्रत्वापत्तिः; तथा च सिद्धमेव तद्दूषणसिद्धिरूपं समीहितमिति वक्तुं शक्यम्, तदुत्तरत्र तदभावेऽपि तत्पूर्वत्र "ग्लिति समानी" ( पि० सू० ५।६ ) इत्यादिसूत्रविनिर्दिष्टानामष्टाक्षरवृत्तानां भूयसां सद्भावात् "वितानमन्यत्" ( पि० सू० ५।८ इति सूत्रोक्ते छन्दसि सुतरां तत्समावेशेनोक्तदूषणस्य दूरोत्सारितत्वात् । अत एव तत्र ( पिङ्गलशास्त्रे ) "वितानमन्यत्" इति सूत्रवृत्तौ प्रदर्शितम्—

"अन्यदतो हि वितानं श्वेतपटेन यदुक्तम् । चित्रपदापि च भौ गौ तेन गतार्थमिवैतत्" ॥ १ ॥

इत्युदाहरणमपि संगच्छते, अन्यथाऽत्रापि द्वितीयतृतीयाक्षरलघुत्वेनाऽनिवार्यो दूषणप्रसङ्गः, अनिष्टं

चैतत् प्रस्तावकस्यापि, नियामकाभावेन संपूर्णेऽपि शास्त्रे दुष्टत्वस्य प्रसक्तेः। न चैतेन यत्रैव वृत्ते नगणद्वयं गुरुद्वयं च क्रमेणोपलभ्यते, तत्रैव तद्दूषणाभावः, न त्वन्यत्र, इत्यपि वचनं चारुतामञ्चति। "वितानमन्यत्" ( पि० सू० ५।८ इत्यत्र अन्यदिति व्यापकनिर्देशेन समानीप्रमाण्यौ व्यतिरिच्य सर्वस्याऽप्यष्टाक्षरछन्दसो ग्रहणात्, इतरथा "वितानं भौ गौ" इत्येव सूत्रं कुर्यात्। न चेदमास्माकमेवाऽऽम्नातम्, तट्टीकाकारेणाऽप्येवमेव प्रतिपादनात्, तथाहि—"किं च 'वितानमन्यत्' इति ब्रुवन् सूत्रकारो वितानस्यानेकप्रकारतां दर्शयति, अन्यथा 'वितानं भौ गौ' इत्येव विदध्यात्" इति। नन्वेवमप्येकस्मिन्नेव सर्गे क्वचन वक्त्रवृत्तम्, कुत्रचिद् विपुलाछन्दः क्वचिच्च वितानमिति भिन्नभिन्नवृत्ताङ्गीकारेऽस्य महाकाव्यत्वक्षतिः "पद्यं प्रायः-" इति महाकाव्यलक्षणे सर्गान्त्यवृत्तसादृश्यप्रतिषेधेन तदतिरिक्तानां सर्गान्तःपातिनां वृत्तानां समानतायाः सामर्थ्याल्लाभात्, विशेषनिषेधस्य शेषाभ्यनुज्ञानान्तरीयकत्वात्, इति चेद्। नैवम्, वक्त्रविपुलयोरिव वितानस्याऽप्यनुष्टुबन्तर्भावेन तेषां सर्वेषामप्यनुष्टुप्तया समानत्वेन महाकाव्यलक्षणसंसिद्धेः; अन्येष्वपि सर्वेषु महाकाव्येष्वनुष्टुप्सर्गे व्यवहृतवक्त्राद्यनेकभेदे एवमेव लक्षणसमन्वयात्। अनुष्टुप्त्वं च वितानस्य "पादस्यानुष्टुब् वक्त्रम्" ( पि० सू० ५।९ ) इत्यतः सूत्रात् सिंहावलोकितन्यायेनाऽनुष्टुबधिकारात्, इतरथा "ग्लिति समानी" ( पि० सू० ५।६ ) इत्यस्मिंस्ततोऽपि पूर्वसूत्रेऽष्टाक्षरनियमाभावेन व्यवस्थाहानिप्रसङ्गात्, तट्टीकायामप्यस्याशयस्योपलभ्यमानत्वाच्च।

१ श्रीहेमचन्द्रप्रणीतकाव्यानुशासनेऽष्टमाध्याये पृ० ३३०। २ तथाहि—" 'पादस्यानुष्टुब् वक्त्रम्' ( पि० सू० ५।९) इत्यतः सूत्रात् सिंहावलोकितन्यायेनाऽनुष्टुब्ग्रहणमनुवर्तते। तेनाऽष्टाक्षरः पादो यावद्भिः" इत्यादि।

यच्च ततोऽनन्तरं काव्यपट्टके चादेः पादादित्वं क्वचन पादान्त्यत्वं च दूषणमभ्यधित प्रस्तावकः, तदप्ययुक्तम्, पादादौ चाद्यप्रयोगनियमस्य प्रायिकत्वात्। प्रायिकत्वं च तस्य "पादादौ न च वक्तव्याश्चादयः प्रायशो बुधैः"[1] इत्यादितन्नियमप्रतिपादक एव सूत्रे प्रायशःशब्दस्य साक्षाद्वक्ष्यमाणत्वात्[2]। तथापि तन्नियमस्य सार्वत्रिकत्वाङ्गीकारे

"रे[1] राक्षसाः! कथयत क्व स रावणो यो रत्नं रवीन्दुकुलयोरपहृत्य नष्टः"

"आः[3] सर्वतः कैरवमापिबन्ति ज्योत्स्नां कषायमधुरा मधुना चकोराः"

"मुखाऽर्पितैकाङ्गुलिसंज्ञयैव[3] मा चापलायेति गणान् व्यनैषीत्"

"क्रियासु[4] युक्तैर्नृपचारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः"

"न[5] क्षोणीजङ्घजानीरुः कलयति च शिरःकम्पनं तन्न विद्मः"

"चरणगतसखीवचोऽनुरोधात्[6] किल कथमप्यनुकूलतां चकार"

इत्यादावपि दूषणप्रसङ्गात्, तत्प्रसङ्गसङ्गमस्य च प्रस्तावकस्याऽप्यनिष्टत्वात्। किञ्च, "चादयः प्रायशो बुधैः" इति पादादावेव चादिनिर्देशं कुर्वन्नालङ्कारिकशिरोमणिः स्वयं ज्ञापयति–चतुर्थपादादौ स्वरादिपदसंहिताश्चादयो नैव दोषायेति सहृदयहृदयसंवेद्यमर्थम्, इतरथाऽत्रापि पादादावेव चादिनिर्देशेन दूष-

१ वाग्भटालङ्कारे १–१७। २ वाग्भटालङ्कारे तस्यैव श्लोकस्य सिंहदेवगणिरचितायां टीकाया प्रायशःशब्दस्यैव चारितार्थ्ये निदर्शनम्। ३ कु० सं० ३–४१। ४ कि० १–४। ५ नैष० १२–३९। ६ शिशु० ७–११।

णप्रसञ्जनस्य निवारयितुमशक्यतया "प्रायशश्चादयो बुधैः" इत्येन वक्तव्यस्योचितत्वात्। इति सूक्ष्मेक्षिकयाऽपि कुतस्तत्र दूषणावकाशः ?। पादान्ते प्रयुक्तस्य तु चादेर्दूषणत्वं पूर्वोक्तनियमादौ नैवोपलभ्यत इत्यस्वीकारादेव तिरस्कृतम्। तदुररीकरणेऽपि वा

"[1]स्वयं तदङ्गेषु गतेषु चारुतां परस्परेणैव विभूषितेषु च"

"[2]हरिराकुमारमखिलाभिधानवित् स्वजनस्य वार्तमयमन्वयुङ्क्त च"

"[3]त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः"

"[4]मनसः शिखराणां च सदृशी ते समुन्नतिः"

इत्यादौ प्रायः सर्वत्राऽपि महाकविसूक्तेषु तद्दूषणप्रसक्तेः केनाऽप्यपहस्तयितुमशक्यत्वात्, इत्युभयतोऽपि पाशारज्जुः प्रस्तावकस्य।

यत्पुनः "ललिताङ्गवत् तथा चाऽऽस्ति" इत्यत्रैकस्मिन्नेव पादे नवाक्षरत्वेन तच्छन्दसो दुष्टत्वमभिहितम्, तदप्यनर्हम्, एवंजातीयस्याऽपि छन्दसः सद्भावेनैतस्य नियमभङ्गासङ्गतत्वात्। स्पष्टं चैतद् गणरत्नमहोदधौ। तथा च तत्रोल्लेखः—"अयमप्यस्ति वृत्तप्रभेदो यत्रैकः पादो नवाक्षरोऽन्येऽष्टाक्षराः" इति। अन्यैरप्येतानि बहुशो व्यवहृतानि यथा—

"परिषद्बलाद् महाब्रह्मैराट नैकटिकाश्रमान्"

" प्रधाने कर्मण्यभिधेये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः" ॥ १ ॥

---

१ नैष० १५–४८। २ शिशु० १३–६८। ३ कु० २–१५। ४ कु० ६–६६।

न चैतच्छन्दोविशेषस्य बहुप्रसिद्धत्वाभावेन व्यवहृतिर्दोषाय इति वक्तुं योग्यम्, महाकाव्यत्वेन विशिष्टशब्दप्रयोगस्येव विशिष्टछन्दोग्रहणस्याऽपि दोषास्पदत्वाभावात्, प्रत्युत श्रोत्राह्लादकत्वेन गुणरूपत्वात्।

यदपि "मा साहसमिति मुहुः" इत्यत्र नविपुलाया चतुर्थाक्षरस्य लघुत्वेन स्खलितविलसितमिति व्याहृतम्, तदप्यविचारितरमणीयम्, विपुलाया चतुर्थाक्षरेण गुरुणैव भवितव्यमिति निश्चयस्य कुत्रचन छन्दःशास्त्रेऽनुपलम्भात्। आम्नायस्य तु तादृशस्य छन्दोविद्भिरपि प्रायिकत्वेनैव कक्षीकारात्। तथा च पिङ्गलस्यैव टीकाकारः—"सर्वासा विपुलानां चतुर्थो वर्णः प्रायेण गुरुर्भवतीत्याम्नायः" इति। अत एव

"शूरः शौरिरशिशिरैराशाशैराशु राशिशः" (माघ० १९–१०८)

इत्यादयो महाकविव्यवहाराः सङ्गच्छन्ते। अन्यथाऽत्रापि सत्यपि चित्रगुणे छन्दसस्तु दुष्टत्वप्रसङ्गः कथं सङ्गतिं नेयात्?। स्पष्टरूपेणैव निष्टङ्कितं चैतत् पिङ्गलस्यैव "भ्रौ न्तौ" (५।११) इति विपुलाप्रतिपादके सूत्रे तविपुलाप्रसङ्गे तट्टीकाकारेण—

"वन्दे देवं सोमेश्वरं जटामुकुटमंडितम्। खट्वाङ्गधरं चन्द्रमशिखामणिविभूषितम्"।

इत्येतच्चतुर्थाक्षरलघुरूपं निदर्शनमुपन्यस्यता हलायुधेन। इत्यलमतिपल्लवितेन।"

तदेवं भगवत्प्रयुक्तस्य सर्वस्यापि प्रयोगजातस्य छन्दोजालस्य चानल्पैः स्वपराभिमतप्रमाणैः संसिद्धिपद्धत्यारूढत्वेन सर्वथा निर्दोषतामश्नुवानस्य ग्रन्थस्याऽस्य समूलचूलमालोकनेन पवित्रीकुर्वतां स्वविलोचनानि निपुणाः, निपीयन्तां भगवद्वचः सुधारसं सहृदयाः, उद्युञ्जतां वर्णितमहामुनिचरितान्यनुकर्तुं साधुजनाः नयन्तां चैवं साफल्यमस्याः सततं यतमानायाः प्रकटयित्र्याः सभायाः परिश्रमं विवेकिनः।

अन्ते, यद्यपि अस्यां प्रस्तावनायां मतिमान्द्यसमुद्भवानि स्खलनानि क्षन्तुं सज्जनान् सानुनयमभ्यर्थ्य, प्रचुराणीदृशग्रन्थरत्नानि प्रकटीकुर्वत्या जैनोन्नतिबद्धपरिकरायाः श्रीजैनधर्मप्रसारकसभायाः, यया समर्पितो मे प्रस्तावयितुमिदमयं शुभावसरः, कृतज्ञतामुररीकृत्य, भगवद्ग्रन्थविलोकनेन प्रादुर्भवतामान्तरोद्गाराणामकृत्वैकश्लोकरूपेणेह प्रकाशनं, न शक्यतेऽवस्थानमाधातुम्, यदुत;—

तावद् गौरवमावहन्तु भवतां चित्तेऽपरे शाब्दिकाः, साहित्यामृतवर्षिणोऽपि दधतां तावत् प्रकर्षं परे ।
तर्कग्रन्थविधायिनस्तदितरे तावच्चमत्कुर्वतां, तास्ता यावदमुं न वः परिचयं श्रीहेमसूरेर्गिरः ॥

श्रीयशोविजयजैनग्रन्थमालाकार्यालयम् ।
वाराणसी ।
आश्विनशुक्ला तृतीया ।

इति निवेदयति—
हरगोविन्दः ।

# परिशिष्टपर्व ।

## प्रथमः सर्गः

श्रीमते वीरनाथाय सनाथायाद्भुतश्रिया । महानन्दसरोराजमरालायार्हते नमः ॥ १ ॥
सर्वेषां वेधसामाद्यमादिमं परमेष्ठिनाम् । देवाधिदेवं सर्वज्ञं श्रीवीरं प्रणिदध्महे ॥ २ ॥
कल्याणपादपारामं श्रुतगङ्गाहिमाचलम् । विश्वाम्भोजरविं देवं वन्दे श्रीज्ञातनन्दनम् ॥ ३ ॥
पान्तु वः श्रीमहावीरस्वामिनो देशनागिरः । भव्यानामान्तरमलप्रक्षालनजलोपमाः ॥ ४ ॥
त्रिषष्टिशलाकापुंसां दशपर्वी विनिर्मिता । इदानीं तु परिशिष्टपर्वास्माभिः प्रतन्यते ॥ ५ ॥
अत्र च जम्बूस्वाम्यादिस्थविराणां कथोच्यते । विश्वस्य कण्ठालङ्कारकृते हारावली शुभा ॥ ६ ॥
अस्यैव जम्बूद्वीपस्य भरतार्धेऽत्र दक्षिणे । देशोऽस्ति मगधाभिख्यो वसुधामुखमण्डनम् ॥ ७ ॥
तस्मिन्ग्रामोपमा गोष्ठा[२] ग्रामाश्च पुरसन्निभाः । पुराणि खेचरपुरप्रायाण्यद्भुतया श्रिया ॥ ८ ॥
अप्येकवारमुप्तानि लूनान्यपि हि कर्षकैः । तत्र धान्यानि दूर्वावत्प्ररोहन्ति मुहुर्मुहुः ॥ ९ ॥
निरामया निरातङ्काः सन्तुष्टाः परमायुषः । वसन्ति तत्र सुषमाकालजाता इव प्रजाः ॥ १० ॥
सदा प्रस्रवशालिन्यः कुण्डोध्न्यस्तत्र सुव्रताः । अहर्निशं कामदोह्या गावः कामगवीनिभाः ॥ ११ ॥
सर्वत्राप्युर्वरैवोर्वी काले वर्षति वारिदः । धर्मकर्मरतो लोकस्तत्र धर्मैकसद्मनि ॥ १२ ॥

---

१ ज्ञानिनाम् । २ गोस्थानानि, व्रजाः ।

याम्यस्य भरतार्धस्य सर्वस्वनिधिभूरिव । श्रियः क्रीडागृहं राजगृहं तत्रास्ति पत्तनम् ॥ १३ ॥
तत्र चैत्येषु सौवर्णध्वजकुम्भमरीचयः । प्रावृष्यासीनमेघानां तडित्सापत्न्यमीयति ॥ १४ ॥
तत्र चन्द्राश्मवासौकःसंक्रान्तः शशभृन्निशि । धत्ते कस्तूरिकापूर्णमुकुराजतपात्रताम् ॥ १५ ॥
प्राकारः सुन्दराकारस्तत्र राजति काञ्चनः । अर्हत्समवसरणादेकः कृत इवामरैः ॥ १६ ॥
दीर्घिकासलिलं तत्र मिलद्भिः पार्श्वयोर्द्वयोः । भ्राजति रत्नसोपानमयूखैर्बद्धसेत्विव ॥ १७ ॥
तत्र चैकातपत्रार्हद्धर्मे हर्म्येषु बालिकाः । नित्यमध्यापयन्त्यर्हत्स्तुतीः क्रीडाशुकानपि ॥ १८ ॥
शिरोदेशपरिस्पृंशि तत्रोच्चैर्जिनसद्मनाम् । स्वर्णकुम्भाविभक्तश्रीण्युडून्याभान्ति रात्रिषु ॥ १९ ॥
तत्र राजतसौवर्णैः प्राकारः कपिशीर्षकैः । भाति चन्द्रांशुमद्बिम्बैर्मर्त्योत्तर इवाचलः ॥ २० ॥
तत्र वासगृहे प्लुष्टधूपगन्धाधिवासितः । प्रेयानिव लगत्यङ्गे खेचरीणां मुदेऽनिलः ॥ २१ ॥
श्रेणीकृतयशास्तत्र श्रेणिकोऽभून्महीपतिः । नेतेव दक्षिणः क्षोणीं लक्ष्मीं चावर्जयन् गुणैः ॥ २२ ॥
सम्यक्त्वरत्नोद्योतेन हृदि तस्य प्रसर्पता । मिथ्यात्वतिमिरस्यावकाशो नाभून्मनागपि ॥ २३ ॥
कर्णपेया सुधेवान्या द्युसदां ददती मुदम् । मध्ये सुधर्मं तत्कीर्तिरप्सरोभिरगीयत ॥ २४ ॥
केन्द्रे दुष्टग्रह इव तस्मिन्प्रातीप्यवर्तिनि । अनर्थं कलयामासुः परितः परिपन्थिनः ॥ २५ ॥
अखण्डशासने राज्ञि तस्मिन्नाखण्डलोपमे । एकातपत्रैवाभून्द्यौरिवैकनिशाकरा ॥ २६ ॥
औदार्यधैर्यगाम्भीर्यशौर्यप्रभृतयो गुणाः । सामुद्रलक्षणानीव जन्मतस्तस्य जज्ञिरे ॥ २७ ॥

---

१ वर्षाऋतौ । २ तडित्साम्यम् । ३ अंशुमान् सूर्यः । ४ प्लुष्टो दग्धः । ५ प्रतिकूलवर्तिनि । ६ शत्रवः ।

विद्धानस्य वसुधामेकछत्रां महौजसः । तस्याज्ञा वज्रिणो वज्रमिव नास्खलि केनचित् ॥ २८ ॥
एकदा तत्पुराभ्यर्णे चैत्ये गुणशिलाह्वये । सुरासुरपरीवारः श्रीवीरः समवासरत् ॥ २९ ॥
रूप्यस्वर्णमणिमयैः प्राकारैर्भूषितं त्रिभिः । चक्रुः समवसरणं तत्प्रदेशे तदामराः ॥ ३० ॥
अशोकवृक्षस्तस्यान्तर्विचक्रे व्यन्तरामरैः । पल्लवैः पवनोद्धूतैर्भव्यजन्तूनिवाह्वयन् ॥ ३१ ॥
सुमेरुरिव पुंरूपो जात्यजाम्बूनदद्युतिः । तस्मिन्समवसरणे पूर्वद्वाराविशद्विभुः ॥ ३२ ॥
अशोकाधःस्थिते देवछन्दे स्वामी यथाविधि । सिंहासनमलञ्चक्रे राजहंस इवाम्बुजम् ॥ ३३ ॥
निषसाद यथास्थानं सङ्घस्तत्र चतुर्विधः । स्वाम्यप्यमृतवृष्ट्याभां प्रारेभे धर्मदेशनाम् ॥ ३४ ॥
तद्देशवासिनस्तूर्णं प्लवमाना मृगा इव । स्वामिनं समवसृतमेत्य राज्ञे व्यजिज्ञपन् ॥ ३५ ॥
राज्ञः पीतवतो नाथागमोदन्तामृतं तदा । वपुः पनसफलवद्धृत्कण्टकमभून्मुदा ॥ ३६ ॥
सिंहासनं पादुके च विहाय मगधाधिपः । स्वामिनं मनसिकृत्यानमद्भून्यस्तमस्तकः ॥ ३७ ॥
स्वाम्यागमनशंसिभ्यो नृपाखः पारितोषिके । हिरण्यमनृणीकारकारणं प्रचुरं ददौ ॥ ३८ ॥
अर्हद्वन्दनयात्रार्हे सदशे श्वेतवाससी । क्षीरोदलहरीस्यूते इव राजाय पर्यधात् ॥ ३९ ॥
तदा च रत्नाभरणैरामुक्तैर्मुकुटादिभिः । अनल्पैः कल्पशाखीव रेजे राजगृहेश्वरः ॥ ४० ॥
हस्त्यश्वादीनि यानानि राजद्वारे तदाज्ञया । सज्जीकृतान्यढौकन्त द्राग् ज्ञातय इव श्रिया ॥ ४१ ॥
कल्याणकारणं गन्धकुञ्जरं नृपकुञ्जरः । अथारुरोह तेजस्वी पूर्वाचलमिवार्यमा ॥ ४२ ॥

---

१ बंधवः ।

कुम्भिभिर्नवसिन्दूरारुणकुम्भैरनेकशः । सन्ध्याभ्रविभ्रमकरैः परिवव्रे नृपद्विपः ॥ ४३ ॥
गजघण्टाटणत्कारैः पूरयन्परितोऽम्बरम् । प्राचालीदचलानाथस्तीर्थनाथमनूत्सुकः ॥ ४४ ॥
गजेन्द्रगर्जितैरश्वहेषितैरथ चीत्कृतैः । मिलद्भिरम्बरतले शब्दोऽम्बरगुणोऽभवत् ॥ ४५ ॥
राज्ञोऽग्र्यसैनिकौ च द्वावेकमेकाग्रमानसम् । एकाङ्घ्रिणा तस्थिवांसमेकमूलमिवाङ्घ्रिपम् ॥ ४६ ॥
सिद्धिक्षेत्रमिवाक्रष्टुमुदञ्चितभुजद्वयम् । आदर्श इव सूर्येऽपि निष्कम्पन्यस्तलोचनम् ॥ ४७ ॥
उद्भिन्नस्फोटकमिवार्कतापात्स्वेदबिन्दुभिः । शान्तरसं मूर्तमिव शान्तं ददृशतुर्मुनिम् ॥ ४८ ॥
त्रिभिर्विशेषकम् ।

तयोरेकतरोऽवादीदहो मुनिमतङ्गजः । वन्दनीयो महात्मायं य एवं तप्यते तपः ॥ ४९ ॥
कस्तिष्ठेदेकपादेन कः पश्येदर्कमण्डलम् । मुहूर्तमप्येवमहो अहो दुष्करकारिता ॥ ५० ॥
स्वर्गो वा यदि वा मोक्षो नास्य दूरे महात्मनः । भूयसा तपसा किं किं नासाध्यमपि साध्यते ॥ ५१ ॥
व्याजहार द्वितीयोऽपि न जानासि वयस्य किम् । राजा प्रसन्नचन्द्रोऽयं न धर्मोऽस्य मुधा तपः ॥ ५२ ॥
अयं हि बालं तनयं न्यधाद्राज्ये स मन्त्रिभिः । प्रच्यावयिष्यते राज्यादामं फलमिव द्रुमात् ॥ ५३ ॥
अनेन हि निजं राज्यं रक्षणाय समर्पितम् । मार्जाराणामिव क्षीरं तेषामेव दुरात्मनाम् ॥ ५४ ॥
तस्मिन्नुच्छेदिते बाले वंशो नास्त्यस्य सर्वथा । स्वपूर्वजन्मनां नामनाशनादेष पातकी ॥ ५५ ॥
प्रविव्रजिषुणानेन याश्च तत्यजिरे प्रियाः । न जाने का गतिस्तासामनाथानां भविष्यति ॥ ५६ ॥

१ अपक ।

तद्वचोवात्यया कर्णकोटरेण प्रविष्टया । प्रसन्नचन्द्रराजर्षेः समाधिद्रुरभज्यत ॥ ५७ ॥
दध्यौ चैवं स राजर्षिरहो तेषां कुमन्त्रिणाम् । सन्मानो यो मयाकारि स भस्मनि हुतं ध्रुवम् ॥ ५८ ॥
मत्सूनोः क्षीरकण्ठस्य तैः शठैः पापकर्मभिः । राज्यमाछेत्तुमारेभे धिक् तान्विश्वस्तघातकान् ॥ ५९ ॥
तत्राहमभविष्यं चेत्तदा तेषां दुरात्मनाम् । अकरिष्यं नवनवैर्निग्रहैरनुशासनम् ॥ ६० ॥
जीवितेनामुना किं मे तपसा भूयसापि किम् । श्रुतिगोचरमायासीत्स्वसूनोर्यत्पराभवः ॥ ६१ ॥
एवं राजर्षिरारोहद्दुर्ध्यानमधिकाधिकम् । आविष्टः क्रोधभूतेन श्रामण्यं व्यस्मरन्निजम् ॥ ६२ ॥
सिंहावलोकनन्यायेनालीढः क्षत्रतेजसा । प्रत्यक्षानिव सोऽद्राक्षीत्तानमात्यान्सुतद्विषः ॥ ६३ ॥
पूर्ववद्रणरङ्गैकसूत्रधारोऽसिधारया । मनसा खण्डशश्चक्रे तान् रणे सूरणानिव ॥ ६४ ॥
छेदनं भेदनं चान्यदपि दुःकर्म दारुणम् । क्रोधान्धो मनसाकार्षीद्राजर्षिः किं न मन्त्रिणाम् ॥ ६५ ॥
तत्र प्रदेशे च तदा राजा राजगृहेश्वरः । आजगाम जिनोपज्ञधर्मद्रुमविहंगमः ॥ ६६ ॥
उत्ततार मुनिं दृष्ट्वा कुञ्जराद्राजकुञ्जरः । भालं तिलकयन्भूमिरेणुना प्रणनाम च ॥ ६७ ॥
उद्बाहुमेकपादस्थं तं दृष्ट्वातापनापरम् । अमोदिष्टान्वमोदिष्ट चात्यर्थं पार्थिवाग्रणीः ॥ ६८ ॥
प्रसन्नचन्द्रराजर्षेस्तपःसामर्थ्यमद्भुतम् । चिन्तयन्नथ राजागाज्जगद्गुरुजिनान्तिके ॥ ६९ ॥
प्रभुं प्रणम्य पञ्चाङ्गस्पृष्टभूर्भूभुजां वरः । निषसाद यथास्थानं पद्मकोशीकृताञ्जलिः ॥ ७० ॥
समयेऽथ जगन्नाथं महीनाथशिरोमणिः । नत्वापृच्छन्मुखद्वाररचितप्रच्छदाञ्चलः ॥ ७१ ॥
ध्यानस्थः समये यत्र प्रसन्नर्षिर्मयैक्ष्यत । तत्रैव चेद्विपद्येत तत्कामासादयेद्गतिम् ॥ ७२ ॥

स्वाम्याख्यात्तत्र समये कृतकालो व्रजेन्नृपः । प्रसन्नचन्द्रो राजर्षिः सप्तमीं नरकावनिम् ॥ ७३ ॥
श्रमणोपासको राजा ऋजुधीरित्यचिन्तयत् । अप्युग्रतपसोऽमुष्य गतिः केयं महामुनेः ॥ ७४ ॥
नृपो भूयोऽपि पप्रच्छ समयेऽस्मिन्महामुनिः । स कालं यदि कुर्वीत का लभेत ततो गतिम् ॥ ७५ ॥
प्रभुः प्रोवाच हे राजन्स राजर्षिर्महातपाः । सर्वार्थसिद्धिगमनयोग्यः सम्प्रति वर्तते ॥ ७६ ॥
राजा जगाद भगवन्किमियं व्याकृतिर्द्विधा । समाख्याहि ममाज्ञस्य सार्वज्ञो वाक्कुतोऽन्यथा ॥ ७७ ॥
स्वाम्याचख्यौ यदा राजन्राजर्षिर्वन्दितस्त्वया । रौद्रध्यानी तदा सोऽभूच्छुक्लध्यानी तु सम्प्रति ॥ ७८ ॥
स तदा नरकार्होऽभूद्रौद्रध्यानपरायणः । सर्वार्थसिद्धियोग्यस्तु शुक्लध्यानपरोऽधुना ॥ ७९ ॥
ज्ञानालोकार्कमर्हन्तं पप्रच्छ श्रेणिकः पुनः । रौद्रध्यानी कथमभूच्छुक्लध्यानी कथं च सः ॥ ८० ॥
स्वाम्यप्युवाच राजंस्त्वदग्रसैनिकवार्त्तया । शुश्रावाभिभवं सूनोर्मन्त्रिभ्यः स्वेभ्य एव सः ॥ ८१ ॥
स्पृष्टः सुतममत्वेन प्रसन्नो विस्मृतव्रतः । मनसा योद्धुमारेभे तैः समं क्रूरमन्त्रिभिः ॥ ८२ ॥
प्रत्यैक्षरिव तैः सार्धं युध्यमानोऽधिकाधिकम् । निष्ठितास्त्रः प्रसन्नोऽभूदप्रसन्नमनाः क्रुधा ॥ ८३ ॥
स सन्नद्ध स्वमज्ञासीदिति चाचिन्तयत्क्रुधा । शिरस्त्रेणापि हन्म्येतान्सर्वं शस्त्रं हि दोष्मताम्[१] ॥ ८४ ॥
ततश्च शिरसि न्यास्थच्छिरस्कादित्सया करम् । तं लुञ्चितं स्पृशन्नात्तव्रतमात्मानमस्मरत् ॥ ८५ ॥
अचिन्तयच्च धिग्धिग्मा रौद्रध्यानानुबन्धिनम् । किं तेन सूनुना किं तैर्मन्त्रिभिर्निर्ममस्य मे ॥ ८६ ॥
इति चिन्तयतस्तस्य विलीने मोहदुर्दिने । विवेकभास्करः प्रादुरभूद्भूयोऽपि भास्वरः ॥ ८७ ॥

१ पराक्रमिणाम्।

भक्त्या तत्रैव वन्दित्वा सोऽस्मानग्रे स्थितानिव । आलोच्याथ प्रतिक्रम्य प्रशस्तं ध्यानमास्थितः ॥८८॥
प्रसन्नचन्द्रो राजर्षिः शुक्लध्यानकृशानुना । कर्मकक्षमुषोष प्राग्दुर्ध्यानारण्यसंभवम् ॥ ८९ ॥
श्रेणिकस्तस्य राजर्षेश्चरितेन सुगन्धिना । वासितः श्रीमहावीरं धर्मवीरो व्यजिज्ञपत् ॥ ९० ॥
अपि बालं सुतं राज्ये विनिवेश्य विशांपतिः । प्रसन्नचंद्रो भगवन्प्रव्रज्यामाददे कथम् ॥ ९१ ॥
अथाख्यद्भगवान्राजन्नगरे पोतनाभिधे । अभूत्सौम्यतया चंद्रः सोमचन्द्रो महीपतिः ॥ ९२ ॥
सधर्मचारिणी तस्य धारिणी धर्मधारिणी । बभूव शीलालङ्कारा विवेकजलदीर्घिका ॥ ९३ ॥
सा गवाक्षेऽन्यदा पत्युरासीनस्य कचोच्चयम् । स्वयं करसरोजाभ्यां विवरीतुं प्रचक्रमे ॥ ९४ ॥
ददर्श च तदा राज्ञः पलितं मूर्ध्नि धारिणी । स्थानं स्वीकृत्यभिज्ञानं जरयेव निवेशितम् ॥ ९५ ॥
व्याजहार च राजानं स्वामिन्दूतोऽयमागतः । दिशोऽवलोक्य राजापि प्रोचे किं नेह दृश्यते ॥ ९६ ॥
राज्ञ्यथादर्शयद्राज्ञः पलितं मूर्ध्न्युवाच च । प्राणेश केशराजोऽयं प्रशस्यो धर्मदौत्यकृत् ॥ ९७ ॥
तृतीयवयसः शस्त्रमिव यौवनघातकम् । तन्मूर्ध्नि पलितं दृष्ट्वा राजा दुरमनायत ॥ ९८ ॥
अभ्यधाद्धारिणी देव किं वृद्धत्वेन लज्जसे । अप्येकं पलितं दृष्ट्वा यद्येवं दुर्मनायसे ॥ ९९ ॥
पटहोद्घोषणां कृत्वा लोकः सर्वो निषेत्स्यते । न यथा वृद्धभावं ते वार्तयापि प्रकाशयेत् ॥ १०० ॥
राजा प्रोवाच जिह्रेमि नाहं पलितदर्शनात् । दौर्मनस्ये पुनरिदं कारणं जीवितेश्वरि ॥ १०१ ॥
अदृष्टपलितैरस्मत्पूर्वजैराददे व्रतम् । अहं तु विषयासक्तः प्रिये पलितवानपि ॥ १०२ ॥
अहमह्नाय गृह्णामि व्रतमेवं स्थितेऽपि हि । किं तु दुग्धमुखे सूनौ राज्यमारोप्यते कथम् ॥ १०३ ॥

यद्वा मे व्रतमादित्सोः किं राज्येन सुतेन किम् । धीमति व्रतमादास्ये त्वं स्वं संवर्धयात्मजम् ॥ १०४ ॥
धारिण्यभिदधे नाहं त्वां विना स्थातुमीश्वरी । सत्यः पत्यनुयायिन्यः समये यत्र तत्र वा ॥ १०५ ॥
तद्बालेऽपि सुते राज्यं निदधीथा अहं पुनः । शुश्रूषिष्ये वनेऽपि त्वां देहछायेव पार्श्वगा ॥ १०६ ॥
अरण्यजस्तरुरिव सुतः स्वैरेव कर्मभिः । प्रसन्नचन्द्रो बालोऽपि वर्धतां तेन किं मम ॥ १०७ ॥
सोमचन्द्रस्ततो राज्यमारोप्य तनुजन्मनि । दिक्प्रोषितस्तापसोऽभूत्सदया धात्र्या च संयुतः ॥ १०८ ॥
स आश्रमपदं किञ्चिच्चिरशून्यमशिश्रयत् । उत्तप च तपस्तेपे शुष्कपत्रादिभोजनः ॥ १०९ ॥
पलाशपत्राण्यादाय स आश्रमकुटीं व्यधात् । मृगाणामध्वगानां च शीतच्छायामृतप्रपाम् ॥ ११० ॥
स्वादुस्वादून्युदकानि वनस्पतिफलानि च । सोमेन्दुरानयत्पत्न्यै स्यूतं[1]स्तत्प्रेमतन्तुभिः ॥ १११ ॥
तत्रापि धारिणी सा तु पत्यावत्यन्तभक्तिभाक् । तल्पं प्रकल्पयामास तदर्थं कोमलैस्तृणैः ॥ ११२ ॥
तत्रेङ्गुदानि पक्वानि पेषं[2] पेषं च धारिणी । स्नेहं जग्राह दिवसे चक्रे च निशि दीपकान् ॥ ११३ ॥
अरण्यगोमयैरार्द्रैः सा लिलेपाश्रमाङ्गणम् । पत्युः सुखासिकाहेतोर्मार्जयामास चासकृत् ॥ ११४ ॥
तत्राश्रमे दम्पती तौ लालयन्तौ मृगार्भकान् । तपःकष्टमजानन्तौ कञ्चित्कालं व्यतीयतुः ॥ ११५ ॥
सन्तोषसुखधारिण्याः धारिण्याः पूर्वसम्भवः । तत्र क्रमेण ववृधे गर्भोऽनुत्पादितव्यथः ॥ ११६ ॥
धारिण्या सूनुरन्यूनलक्षणः सुषुवेऽन्यदा । कान्त्या दीप इवातैलपूरोऽन्तःसूतिकागृहम् ॥ ११७ ॥
आश्रमे वल्कलान्येवेत्यवेष्टयत स वल्कलैः । पित्रा वल्कलचीरीति ततस्तन्नाम कल्पितम् ॥ ११८ ॥

१ प्रोत॰ । २ पिष्ट्वा पिष्ट्वा ।

विपेदे धारिणी सूतिरोगेण तनयः पुनः । अदृष्टमातृकः सोऽभूत्पुमानिव निरक्षरः ॥ ११९ ॥
अरण्यमहिषीक्षीरं पाययित्वा मुहुर्मुहुः । सोमेन्दुरार्पयद्धात्र्या धारणाय तमर्भकम् ॥ १२० ॥
अवाप सापि पञ्चत्वं कालेन कियतापि हि । धात्री दैववशेनानुयियासुरिव धारिणीम् ॥ १२१ ॥
अपीप्यन्महिषीक्षीरं सोमेन्दुस्तं शिशुं स्वयम् । योगिपार्श्वः शयानो वा स्वयमङ्के दधार च ॥ १२२ ॥
स क्रमाद्वर्धमानोऽभूत्पादचंक्रमणक्षमः । चक्रे च प्रत्यहं पांशुक्रीडां वनमृगार्भकैः ॥ १२३ ॥
एधोभिः स्वयमानीतैर्नीवारैः स्वयमाहृतैः । स्वयं रसवतीं कृत्वा सोमेन्दुस्तमभोजयत् ॥ १२४ ॥
वनधान्यैर्वनफलैः पोषं पोषं तमर्भकम् । सोमचन्द्रो व्यधादात्मसखं तपसि दुस्तपे ॥ १२५ ॥
यौवनाभिमुखश्चाखकर्मीणः सर्वकर्मसु । पितृचर्याप्रवीणोऽभूदथ वल्कलचीर्यपि ॥ १२६ ॥
फलाद्यानयनैर्नित्यमङ्गसंवाहनेन च । शुश्रूषां स पितुश्चक्रे सा हि सर्वव्रतोत्तमा ॥ १२७ ॥
आजन्मब्रह्मचार्येव व्रती वल्कलचीर्यभूत् । स्त्रीणां नामापि नाज्ञासीदस्त्रीके निवसन्वने ॥ १२८ ॥
प्रसन्नचन्द्रः शुश्राव वनस्थस्यान्यदा पितुः । धारिणीकुक्षिसम्भूतं सुतं सोदरमात्मनः ॥ १२९ ॥
कीदृशोऽस्ति स मे भ्राता मिलिष्यति कथं पुनः । इत्यभूद्रणरणको राज्ञो मनसि दुर्धरः ॥ १३० ॥
अथादिशच्चित्रकरांस्तत्र यात तपोवने । यच्छ्रीमत्तातपादानां पादपद्मैरलङ्कृतम् ॥ १३१ ॥
पितृपादाब्जहंसस्य मदीयस्यानुजन्मनः । वने निवसतो रूपमालिख्यानयत द्रुतम् ॥ १३२ ॥ युग्मम् ॥
प्रमाणमादेश इति प्रोच्य चित्रकरा अपि । ययुस्तत्र वने पुण्यीकृते वल्कलचीरिणा ॥ १३३ ॥

---

१ अपाययत् । २ गच्छन् । ३ काष्ठैः । ४ तृणधान्यविशेषैः ।

ते विश्वकर्मणो मूर्त्यन्तराणीवातिकौशलात् । तमालिखन्यथावस्थमादर्शप्रतिविम्बवत् ॥ १३४ ॥
आनीय दर्शयामासू रूपं वल्कलचीरिणः । ते चित्रकारिणो राज्ञः सुधावर्तिंनिज्नं दृशोः ॥ १३५ ॥
दध्यौ नृपतिराकृत्या मत्पितुर्नैष हीयते । आत्मा वै जायते पुत्रः श्रुतिरेषा हि नान्यथा ॥ १३६ ॥
दिष्ट्या सोदर दृष्टोऽसीत्यभिधायासकृन्नृपः । तं सस्वजे मूर्ध्नि जघ्नौ न चाङ्कादुदतारयत् ॥ १३७ ॥
वल्कलाच्छादनधरं दृष्ट्वा वल्कलचीरिणम् । उदश्रुर्भूगिज्जूराजा सनिर्झर इवाचलः ॥ १३८ ॥
ऊचे च प्रवयास्तातो युक्तमाचरतु व्रतम् । मद्भ्रातुस्त्वस्य बालस्य वनवासोऽपि नार्हति ॥ १३९ ॥
अहं राज्यसुखह्रदे मग्नः क्रीडामि हंसवत् । पुलिन्द इव मे भ्राता वनवृत्त्यानुजीवति ॥ १४० ॥
अरण्यजो जीव इव दुरानेयः स पत्तने । कष्टं तु मम राज्येऽपि तस्मिन्राज्याविभागिनि ॥ १४१ ॥
वनकेष्टमिति भ्रातुरनुशोचन्महीपतिः । एवमाज्ञापयामास वेश्याश्चातुर्यशालिनीः ॥ १४२ ॥
मुनिवेषेण गत्वाङ्गस्पर्शैर्नवनवोक्तिभिः । प्रलोभ्य खाण्डैश्च फलैरिहानयत मेऽनुजम् ॥ १४३ ॥
इति राजाज्ञया वेश्या मुनिवेषभृतो द्रुतम् । तदाश्रमपदं जग्मुः सोमचन्द्रेण सेवितम् ॥ १४४ ॥
फलान्यादाय बिल्वादीन्यायान्तमृषिपुत्रकम् । वल्कलाच्छादनं तत्र ददृशुस्तं मृगीदृशः ॥ १४५ ॥
मुनिवेषभृतां तासां सोऽकार्षीदभिवादनम् । ऋजुधीरित्यपृच्छच्च के यूयं को व आश्रमः ॥ १४६ ॥
ताः प्रोचुर्वयमृषयः पोतनाश्रमवासिनः । तवागताः स्मोऽतिथयः किमातिथ्यं करिष्यसि ॥ १४७ ॥
उवाच स फलान्येतान्याहृतानि मया वनात् । यूयमश्नीत पक्वानि मधुराणि महर्षयः ॥ १४८ ॥

१ वृद्धः । २ वनवासकष्टं ।

ताश्चोचुराश्रमपदेऽस्मदीये नेदृशान्यहो । फलानि कश्चिदश्नाति नीरसान्यतिनीरसः ॥ १४९ ॥
अस्मदाश्रमवृक्षाणामीक्षस्व फलवर्णिकाम् । इत्युक्त्वा ता निषेदुर्द्रुमूले तं च न्यपादयन् ॥ १५० ॥
ताश्च तं प्राशयन्खण्डफलान्यविफलाशयाः । सोऽपि सद्यस्तदास्वादाद्विद्वाद्युद्वेगन्नागञ्जूत् ॥ १५१ ॥
एकस्थानस्थितं तास्तं स्वाङ्गस्पर्शमचीकरन् । तत्करं च न्यधुः पीनकुचकुम्भे निजोरसि ॥ १५२ ॥
स ऊचे कोमलमिदं किमङ्गं वो महर्षयः । किमुन्नते स्थले एते यौष्माकीणे च वक्षसि ॥ १५३ ॥
ताः प्रोचुस्तं स्पृशन्त्यः स्वैः कोमलैः पाणिपल्लवैः । अस्मद्वनफलास्वादे हीदृक् स्यादङ्गमार्दवम् ॥१५४॥
आस्वादितैर्वनफलैरस्मदीयैर्महारसैः । अत्यन्तोपचयादेते जायेते हृदि च स्थले ॥ १५५ ॥
तद्विमुंचाश्रममिममसाराणि फलानि च । अस्मदाश्रममागत्य त्वमप्यस्मादृशो भव ॥ १५६ ॥
अथ खण्डफलास्वादलुब्धो वल्कलचीर्यपि । सङ्केतमग्रहीन्मुग्धस्ताभिः सह यियासया ॥ १५७ ॥
संस्थाप्य तापसभाण्डमागाद्वल्कलचीर्यपि । यथोदितं च सङ्केतस्थानं ताभिरधिष्ठितम् ॥ १५८ ॥
तदा च ददृशे वृक्षाधिरूढैश्चरपूरुषैः । आगच्छन्सोमचन्द्रर्षिरकथ्यत च योषिताम् ॥१५९ ॥
मा शाप्सीदेष इति तास्तस्माद्भीता द्रुतद्रुतम् । नेशुर्मृग्य इव व्याधादमिलन्त्यः परस्परम् ॥ १६० ॥
स्थानं गते च पितरि कुमारस्ताः पणाङ्गनाः । नष्टस्वः स्वमिवान्वेष्टुमुपाक्रंस्ताखिले वने ॥ १६१ ॥
ददर्श रथिनं चैकं स धावन्मृगवद्वने । तमप्यृषिं मन्यमानोऽवदत्ताताभिवादये ॥ १६२ ॥
रथ्यपृच्छत्कुमार त्वं क्व गमिष्यसि सोऽवदत् । गमिष्याम्याश्रमपदं महर्षे पोतनाभिधम् ॥ १६३ ॥

---

१ नष्टधन । २ धनमित्र ।

रथ्यवादीदहमपि यियासुः पोतनाश्रमम् । ततोऽन्वगात्तमग्रेगूमिव वल्कलचीर्यपि ॥ १६४ ॥
स तापसकुमारोऽपि पथि यान्रथिकप्रियान् । रथाधिरूढां तातेति जापते स्म मुहुर्मुहुः ॥ १६५ ॥
रथिनं तत्प्रियावोचत्केयमस्योपचारगीः । यत्तापसकुमारोऽयं मयि तातेति जल्पति ॥ १६६ ॥
रथिकः स्माह मुग्धोऽयमस्त्रीकेऽस्मिन्वने वसन् । स्त्रीपुंसयोरज्ञो नरं त्वामपि मन्यते ॥ १६७ ॥
प्रवीयमानान्दृष्ट्वाश्वानूचे वल्कलचीर्यदः । वाह्यन्ते किममी तात मृगा नार्हन्त्यदो मुनेः ॥ १६८ ॥
व्याजहाराथ रथिकः स्मित्वा वल्कलचीरिणम् । हंहो कर्मेदमेनैषां मृगाणां नात्र दुष्यति ॥ १६९ ॥
रथिको मोदकान्खादून्ददौ वल्कलचीरिणे । सोऽखादच्च तदास्वादसुखमग्नो जगाद च ॥ १७० ॥
ईदृशानि वनफलान्यहमग्रेऽप्यखादिषम् । महर्षिभिः प्रदत्तानि पोतनाश्रमवासिभिः ॥ १७१ ॥
अभूच्च मोदकास्वादात्पोतनं गन्तुमुत्सुकः । कषायरूक्षैर्नटितः स बिल्वामलकादिभिः ॥ १७२ ॥
रथिनश्चाजवद्युद्धं चौरेणैकेन दोष्मता । रथी गाढप्रहारेण तं चौरं निजघान च ॥ १७३ ॥
ोऽप्युवाच घातो हि वैरिणोऽपि प्रशस्यते । मामजैषीः प्रहारेण तेन तुष्टोऽस्मि मानव ॥ १७४ ॥
ं धनमत्रास्ति मदीयं तद्गृहाण भोः । त्रयोऽप्यारोपयामासुरथ तद्द्रविणं रथे ॥ १७५ ॥
ण पोतनं प्राप्तो रथी वल्कलचीरिणम् । प्रोवाच प्रेप्सितो यस्ते पोतनाश्रम एष सः ॥ १७६ ॥
किंचिच्च द्रविणं तस्मै रथी तापससूनवे । प्रददौ मार्गसुहृदे स्मयमानो जगाद च ॥ १७७ ॥
अमुष्मिन्नाश्रमपदे न विना द्रव्यमाश्रयः । तदाश्रमार्थी कस्मैचिद्दद्याद्द्रव्यमवक्रये ॥ १७८ ॥

---

१ °हसन् ।

किमत्र यामि याम्यत्र किं वेति सकले पुरे । उत्प्रेक्षमाणो हर्म्याणि बभ्राम मुनिपुङ्गवः ॥ १७९ ॥
नराणामथ नारीणामृषिबुद्ध्या स मुग्धधीः । अभिवादनवातूल उपाहास्यत नागरैः ॥ १८० ॥
पुरे भ्रमन्नथैकस्या वेश्यायाः स निकेतने । विवेश त्वरितं चापमुक्तः शर इवास्खलन् ॥ १८१ ॥
स तद्वेश्माश्रमं मेने वेश्यां मुनिममन्यत । इति तामप्युवाचैवं तात त्वामभिवादये ॥ १८२ ॥
इति च प्रार्थयाञ्चक्रे समर्पय ममोटजम् । अमुष्यावक्रये द्रव्यं महर्षे गृह्यतामिदम् ॥ १८३ ॥
त्वदीय उटजो ह्येष गृह्यतामित्युदीर्य सा । तदङ्गसंस्कारकृते दिवाकीर्तिमजूहवत् ॥ १८४ ॥
अनिच्छतोऽपि तस्यर्षेर्नापितो गणिकाज्ञया । शूर्पोपमान्पादनखानकुन्वन्नुदतारयत् ॥ १८५ ॥
कृत्वा वल्कलचीरापनयनं सा पणाङ्गना । तं कुमारं स्नपयितुं वराशिं पर्यधापयत् ॥ १८६ ॥
आजन्म मुनिवेषं मे मापनैषीर्महामुने । स वल्कलापनयनादिति बाल इवारटत् ॥ १८७ ॥
वेश्यावोचन्महर्षीणामतिथीनामिहाश्रमे । उपचारपदं ह्येतत्तत्प्रतीच्छसि किं न हि ॥ १८८ ॥
त्वमस्मदाश्रमाचारानीदृशांश्चेत्प्रतीच्छसि । तदा हि लप्स्यसे वस्तुमुटजं मुनिपुत्रक ॥ १८९ ॥
ततस्तद्वासलोभेन स तापसकुमारकः । नाङ्गमप्यधुनोन्मन्त्रवशीकृत इवोरगः ॥ १९० ॥
तत्केशपाशं जटिलं तैलेनाभ्यज्य सा स्वयम् ॥ ऊर्णापिण्डमिव शनैर्विबभ्रे वरवर्णिनी ॥ १९१ ॥
अभ्यज्य मृज्यमानाङ्गस्तया सोमेन्दुभूरभूत् । कण्डूय्यमान इव गौः सुखनिद्राणलोचनः ॥ १९२ ॥
गणिका स्नपयित्वाथ कवोष्णैर्गन्धवारिभिः । तमामोचयदग्र्याणि वस्त्राण्याभरणानि च ॥ १९३ ॥

---

१ नापितम् । २ श्रेष्ठानि ।

रथ्यवादीदहमपि यियासुः पोतनाश्रमम् । ततोऽन्वगात्तमग्रेगूमिव वल्कलचीर्यपि ॥ १६४ ॥
स तापसकुमारोऽपि पथि यान्रथिकप्रियान् । रथाधिरूढां तातेति न्नापते स्म मुहुर्मुहुः ॥ १६५ ॥
रथिनं तत्प्रियावोचत्केयमस्योपचारगीः । यत्तापसकुमारोऽयं मयि तातेति जल्पति ॥ १६६ ॥
रथिकः स्माह मुग्धोऽयमस्त्रीकेऽस्मिन्वने वसन् । स्त्रीपुंसयोरज्ञेदज्ञो नरं त्वामपि मन्यते ॥ १६७ ॥
प्रवीयमानान्दृष्ट्वाश्वानूचे वल्कलचीर्यदः । वाह्यन्ते किममी तात मृगा नार्हन्त्यदो मुनेः ॥ १६८ ॥
व्याजहाराथ रथिकः स्मित्वा वल्कलचीरिणम् । हंहो कर्मेदमेवैषां मृगाणां नात्र दुष्यति ॥ १६९ ॥
रथिको मोदकान्खादून्ददौ वल्कलचीरिणे । सोऽखादच्च तदास्वादसुखमग्नो जगाद च ॥ १७० ॥
ईदृशानि वनफलान्यहमग्रेऽप्यखादिषम् । महर्षिभिः प्रदत्तानि पोतनाश्रमवासिभिः ॥ १७१ ॥
अभूच्च मोदकास्वादात्पोतनं गन्तुमुत्सुकः । कषायरूक्षैर्नटितः स बिल्वामलकादिभिः ॥ १७२ ॥
रथिनश्चाभवद्युद्धं चौरेणैकेन दोष्मता । रथी गाढप्रहारेण तं चौरं निजघान च ॥ १७३ ॥
चौरोऽप्युवाच घातो हि वैरिणोऽपि प्रशस्यते । मामजैषीः प्रहारेण तेन तुष्टोऽस्मि मानव ॥ १७४ ॥
विपुलं धनमत्रास्ति मदीयं तद्गृहाण भोः । त्रयोऽप्यारोपयामासुरथ तद्द्रविणं रथे ॥ १७५ ॥
क्रमेण पोतनं प्राप्तो रथी वल्कलचीरिणम् । प्रोवाच प्रेप्सितो यस्ते पोतनाश्रम एष सः ॥ १७६ ॥
किंचिच्च द्रविणं तस्मै रथी तापससूनवे । प्रददौ मार्गसुहृदे स्मयमानो जगाद च ॥ १७७ ॥
अमुष्मिन्नाश्रमपदे न विना द्रव्यमाश्रयः । तदाश्रमार्थी कस्मैचिद्दद्याद्द्रव्यमवक्रये ॥ १७८ ॥

१ हसन् ।

किमत्र यामि याम्यत्र किं वेति सकले पुरे । उत्प्रेक्षमाणो हर्म्याणि बभ्राम मुनिपुङ्गवः ॥ १७९ ॥
नराणामथ नारीणामृषिबुद्ध्या स मुग्धधीः । अभिवादनवातूल उपाहास्यत नागरैः ॥ १८० ॥
पुरे भ्रमन्नथैकस्या वेश्यायाः स निकेतने । विवेश त्वरितं चापमुक्तः शर इवास्खलन् ॥ १८१ ॥
स तद्वेश्माश्रमं मेने वेश्यां मुनिममन्यत । इति तामप्युवाचैवं तात त्वामभिवादये ॥ १८२ ॥
इति च प्रार्थयाञ्चक्रे समर्पय ममोटजम् । अमुष्यावक्रये द्रव्यं महर्षे गृह्यतामिदम् ॥ १८३ ॥
त्वदीय उटजो ह्येष गृह्यतामित्युदीर्य सा । तदङ्गसंस्कारकृते दिवाकीर्तिमजूहवत् ॥ १८४ ॥
अनिच्छतोऽपि तस्यर्षेर्नापितो गणिकाज्ञया । शूर्पोपमान्पादनखानकुन्तन्नुदतारयत् ॥ १८५ ॥
कृत्वा वल्कलचीरापनयनं सा पणाङ्गना । तं कुमारं स्नपयितुं वराशिं पर्यधापयत् ॥ १८६ ॥
आजन्म मुनिवेषं मे मापनैषीर्महामुने । स वल्कलापनयनादिति बाल इवारटत् ॥ १८७ ॥
वेश्यावोचन्महर्षीणामतिथीनामिहाश्रमे । उपचारपदं ह्येतत्तत्प्रतीच्छसि किं न हि ॥ १८८ ॥
त्वमस्मदाश्रमाचारानीदृशाश्चेत्प्रतीच्छसि । तदा हि लप्स्यसे वस्तुमुटजं मुनिपुत्रक ॥ १८९ ॥
ततस्तद्वासलोभेन स तापसकुमारकः । नाङ्गमप्यधुनोन्मन्त्रवशीकृत इवोरगः ॥ १९० ॥
तत्केशपाशं जटिलं तैलेनाभ्यज्य सा स्वयम् ॥ ऊर्णापिण्डमिव शनैर्विबभ्रे वरवर्णिनी ॥ १९१ ॥
अभ्यज्य मृज्यमानाङ्गस्तया सोमेन्दुजूरभूत् । कण्डूयमान इव गौः सुखनिद्राणलोचनः ॥ १९२ ॥
गणिका स्नपयित्वाथ कवोष्णैर्गन्धवारिभिः । तमामोचयदर्घ्याणि वस्त्राण्याभरणानि च ॥ १९३ ॥

---

१ नापितम् । २ श्रेष्ठानि ।

तथैकस्या दारिकायाः पाणिग्रहमकारि सः । साक्षात्तस्य करगता गार्हस्थ्यश्रीरिवाङ्गिनी ॥ १९४ ॥
वधूवरं च गायन्त्यः सर्वास्तस्थुः पणाङ्गनाः । दध्यावृषिकुमारस्तु ऋषयोऽमी पठन्ति किम् ॥ १९५ ॥
अवीवदच्च मङ्गल्यान्यातोद्यानि पणाङ्गना । किमेतदिति सम्भ्रान्तः प्यधात्कर्णौ च सोमजूः ॥ १९६ ॥
मुनिवेषजुषो वेश्याः कुमारानयने गताः । यथा गतास्तथैवैत्य तदोर्वीशं व्यजिज्ञपन् ॥ १९७ ॥
तैस्तैः प्रकारैः प्रालोभि स कुमारो वनेचरः । इहागन्तुं च सङ्केतमस्माभिः सममग्रहीत् ॥ १९८ ॥
अप्यायान्तं तदा दूरे दृष्ट्वा तस्तितरं वयम् । तस्य शापभयान्नष्टाः कातराः स्त्रीस्वभावतः ॥ १९९ ॥
सोऽस्मान् गवेषयन्नस्मत्प्रलोभनवशंवदः । भ्रमन्वनाद्वनं गामी न गामी पितुराश्रमम् ॥ २०० ॥
अनुशिश्ये विशामीशः किमकार्षमहं जडः । वियोगितौ पितापुत्रौ मया प्राप्तश्च नानुजः ॥ २०१ ॥
पितृपार्श्वात्परिभ्रष्टो जीविष्यति कथं नु सः । कियच्चिरं जीवति हि मीनो नीराद्बहिष्कृतः ॥ २०२ ॥
एवं दुःखादरतिभागभूद्भूशमिलापतिः । उद्वेल्लञ्शयनेऽप्यस्थान्मीनः स्तोक इवाम्भसि ॥ २०३ ॥
वेश्यायाः सदने तस्यास्तदा च मुरजध्वनिः । कर्णयोरवनीभर्तुरप्रियातिथितां ययौ ॥ २०४ ॥
ऊचे च राजा नगरं सर्वं मद्दुःखदुःखितम् । लोकोत्तरसुखी कोऽयं यस्याग्रेमुरजध्वनिः ॥ २०५ ॥
स्वार्थनिष्ठोऽथवा सर्वो मृदङ्गध्वनिरेष हि । मुदे कस्यापि मम तु मुद्गराघातसन्निभः ॥ २०६ ॥
सा राज्ञो वाग्जनश्रुत्या पानीयमिव कुल्यया । कर्णालवालं वेश्यायास्तस्यास्तूर्णमपूरयत् ॥ २०७ ॥
प्रसन्नचन्द्रं राजानं साथ गत्वा कृताञ्जलिः । वेश्या विज्ञपयामास धाष्टर्योत्कृष्टप्रगल्भवाक् ॥ २०८ ॥

---

१ पश्चात्तापमकरोत् ।

पुरा मे देव दैवज्ञोऽकथयद्यस्तवौकसि । ऋषिवेषो युवाभ्येति दद्यास्तस्य निजां सुताम् ॥ २०९ ॥
ऋषिवेषो युवा कोऽपि गोवेस व्यवहारवित् । अभ्यागान्मद्गृहे सोऽद्योद्वाहितः सुतया त्वया ॥ २१० ॥
तद्विवाहोत्सवे देव गीतवाद्यादि मद्गृहे । दुःखिनं त्वां न जानामि यद्योगो मे सहस्व तत् ॥ २११ ॥
अथादिशन्नरान्राजा कुमारं दृष्टपूर्विणः । उपलक्षयितुं तेऽपि गत्वोपालक्षयंश्च तम् ॥ २१२ ॥
अथैत्य ते नरेन्द्राय तं तथैव न्यजिज्ञपन् । राजापि दृष्टसुस्वप्न इवात्यर्थममोदत ॥ २१३ ॥
तया समन्वितं वध्वा करेणुमधिरुह्य च । आनिनाय निजं वेश्म राजा वल्कलचीरिणम् ॥ २१४ ॥
अखिलव्यवहारज्ञो राज्ञाकारि क्रमेण सः। पशवोऽपि हि शिक्ष्यन्ते निपुणैः किं पुनः पुमान् ॥ २१५॥
तस्मै राज्यविभागं च दत्त्वा राजा कृतार्थभूत् । राजकन्याश्च तेनोदवाहयत्स्वर्वधूपमाः ॥ २१६ ॥
वधूभिः सहितः ताभिरखण्डितसमीहितः । रेमे वल्कलचीर्युच्चैः सुखाब्धिजलकुञ्जरः ॥ २१७ ॥
सोऽन्यदा रथिको मार्गसुहृद्वल्कलचीरिणः । तच्चौरदत्तं स्वर्णादि विक्रीणानोऽभ्रमत्पुरे॥ २१८ ॥
यद्यस्य यस्य चौरेणापहृतं स स तद्धनम् । उपलक्ष्यारक्षकाणामूर्ध्वबाहुरचीकथत् ॥ २१९ ॥
संयम्य च स आरक्षै राजद्वारमनीयत । तं च राजानुजोऽद्राक्षीद्दृशा जीवानुकम्पया ॥ २२० ॥
तमुपालक्ष्यवल्कलचीरी मार्गोपकारिणम् । अमोचयच्च सन्तो हि नोपकारस्य घस्मराः ॥ २२१ ॥
सोमचन्द्रोऽपि पुत्रं स्वमपश्यन्नश्रमद्वने । वृक्षाद्वृक्षं नेत्रजलैः सिञ्चन्निव निरन्तरम् ॥ २२२ ॥
प्रसन्नचन्द्रप्रहितैर्नरैर्वल्कलचीरिणः । प्रवृत्तौ कथितायां च सोऽभूदुत्फुल्ललोचनः ॥ २२३ ॥

---

१ नृपभवत् । २ अपराधः । ३ प्रफुल्लनेत्रः ।

परं सुतवियोगेन तेन तस्यातिरोदनात् । अह्नोऽपि रात्रीकरणमन्धत्वमुदपद्यत ॥ २२४ ॥
स जरत्तापसोऽन्यैश्च तपःसब्रह्मचारिभिः । तापसैस्तपसः प्रान्ते फलादिभिरपार्यत ॥ २२५ ॥
पूर्णेषु द्वादशस्वब्देष्वन्यदैवमचिन्तयत् । प्रसन्नचन्द्रावरजो रजन्यर्धे प्रबोधभाक् ॥ २२६ ॥
विपेदे मन्दभाग्यस्य जातमात्रस्य मे प्रसूः । कुमारभृत्यामकरोत्तातोऽरण्ये वसन्नपि ॥ २२७ ॥
अहर्निशं कटिस्थेन मया दूरं दुरात्मना । तपःकष्टादप्यधिकं कष्टमुत्पादितं पितुः ॥ २२८ ॥
यावत्प्रत्युपकाराय क्षमीभूतोऽस्मि यौवने । दैवादिहागमं तावत्पापोऽहमजितेन्द्रियः ॥ २२९ ॥
पितुरानृण्यभाग्नाहं भवाम्येकेन जन्मना । येनाहं सोढकष्टेन पूतरैः कुञ्जरीकृतः ॥ २३० ॥
स एवं चिन्तयन्नेव गत्वा राजानमब्रवीत् । देवाहं तातपादानां भृशमुत्कोऽस्मि दर्शने ॥ २३१ ॥
राजा प्रोवाच हे भ्रातः पिता हि सम आवयोः । तत्पाददर्शनौत्सुक्यं तवेवास्ति ममापि तत् ॥ २३२ ॥
राजा च युवराजश्च ततस्तौ सपरिच्छदौ । तदाश्रमपदं तातपादालङ्कृतमीयतुः ॥ २३३ ॥
द्वावप्युत्तेरतुर्यानादूचे वल्कलचीर्यदः । दृष्ट्वा तपोवनमिदं राज्यश्रीस्तृणवन्मम ॥ २३४ ॥
सरोवराणि तान्येतान्यक्रीडं यत्र हंसवत् । तेऽमी द्रुमाः कपिरिवाखादिषं यत्फलान्यहम् ॥ २३५ ॥
तेऽमी मे भ्रातर इव पांशुक्रीडासखा मृगाः । महिष्यस्ता इमा मातृनिभा यासामपां पयः ॥ २३६ ॥
स्वामिन्वने सुखान्यस्मिन्कियन्ति कथयाम्यहम् । अप्येकं पितृशुश्रूषासुखं राज्ये कुतो मम ॥ २३७ ॥
तत्राश्रमे विविशतुर्भ्रातरौ तावुभावपि । तातं चाग्रे ददृशतुर्नयनाम्भोजभास्करम् ॥ २३८ ॥

१ तपोयुक्तैः । २ लघुर्जलजतुः पूरो इति लोके ।

